यति । व्यापारयति वेत्यर्थः । परिवेषणे तु यमयति ब्राह्मणान् । भोजयतीत्
'पर्यवसितं नियमन्' इत्यादि तु नियमवच्छब्दात्तत्करोतीति णौ बोध्यम् ।
'स्खदिरवपरिभ्यां च' (ग० सू० १९४) मिन्नेत्येव अवस्खादयति । परिस्खादयति
पावपरिभ्यः इति न्यासकारः । स्वामी तु 'न कमि—' इति नञमुत्तरत्रिसूत्र्यामनुवर्त्य
मः अदर्शने' इति चिच्छेद । यमस्तु अपरिवेषणे मित्त्वमाह । तन्मते 'पर्य

---

अनुकूलपरिवेषणादन्यत्रेत्यर्थः । 'यम उपरमे' इत्यस्य उपसर्गवशात् परिवेषणे
ऽप्यस्मिन्नप्यर्थे वृत्तिः सम्भवति । तत्र अपरिवेषणे वृत्तौ मित्त्वं नेत्यर्थः ।
यतीति । अत्राऽपरिवेषणे वृत्तेर्न मित्त्वमिति भावः । तदाह—द्राघयतीति । दीर्घ
तीत्यर्थः । व्यापारयति । प्रवर्तयतीत्यर्थः । यमयति ब्राह्मणानिति । परिवेष
त्वान्मित्त्वमिति भावः । तदाह—भोजयतीति । भुञ्जते ब्राह्मणाः, तान्परिवेषणे
र्तयतीत्यर्थः । ननु 'पर्यवसितं नियमन्'नित्यत्र अपरिवेषणार्थकतया मित्त्वा
त्कथं ह्रस्व इत्यत आह—पर्यवसितमित्यादि । नियमनं नियमः । 'यमः सम्
विषु च' इति भावे अप्प्रत्ययः । तस्मान्मतुप् नियमवच्छब्दात्तत्करोतीति ।
'विन्मतोर्लुक्' इति मतुपो लुकि ण्यन्तान्नाटः शतरि गुणावादेशयोर्नियमयन्
भावः । वस्तुतस्तु मतुपो लुकि टिलोपस्याऽप्राप्त्या 'अचो ञ्णिति' इति
पुगागमापत्तिः । ततश्च नियमवदित्यर्थकाद् अर्शआद्यजन्तात् नियम
'तत्करोति' इति णिचि इष्ठवत्त्वाट्टिलोपे तस्य स्थानिवत्त्वादुपधावृद्ध्यभावे
यन्नि'ति समर्थनीयमिति शब्देन्दुशेखरे स्थितम् । 'स्खदिरवपरिभ्यां च' इत्यपि
त्रम् । स्खदिरिति इका निर्देशः । अव परि आभ्यां परः स्खद्धातुर्मिन्नेत्यर्थः ।
स्खदने' इति घटादौ पाठान्मित्त्वप्राप्तिः । परिस्खादयतीति । षोपदेशत्वेन आदेश
त्वाऽभावान्न ष इति भावः । अपावेति । 'स्खदिरपावपरिभ्यः' इति न्यासकार
त्यर्थः । तन्मते अपस्खादयतीत्यत्रापि मित्त्वाभावान्न ह्रस्वः । स्वामी त्विति । 'न
मिचमाम्' इत्यत्र श्रुतः नञ् 'शमो दर्शने' 'यमोऽपरिवेषणे' स्खदिरवपरिभ्यां च
त्रिषु सूत्रेषु नानुवर्तते । शमः अदर्शने इति च्छेदः । शमधातुः अदर्शने मित्त्या
र्थः । अनन्तरत्वादेव सिद्धे नियमार्थमिदम् । अदर्शन एव शमधातुर्मित्त्या
दर्शने' इति स्वामिमतम् । इदं च पर्यवसानगत्या पूर्वमतान्नाऽतिरिच्यते । य
ति । यमधातोस्तु अपरिवेषण एव मित्त्वमाहेत्यर्थः । अनन्तरत्वादेव सिद्धरूप
एव यमधातुर्मित न तु परिवेषण इति फलति । एवं च द्राघयति व्यापारयति
मित्त्वाद्ध्रस्वे 'आयमयती'त्येव रूपम् । परिवेषणे तु मित्त्वाऽभावाद्ध्रस्वाऽभावे
यति ब्राह्मणा'निति भवतीति पूर्वमताद्विपरीतं फलति । एवं च 'पर्यवसितं नि
न्नि'त्यत्र यमेरपरिवेषणार्थत्वान्मित्त्वे ह्रस्वो निर्बाधः । तदाह—तन्मते इति ।
र्घटादित्वादेव मित्त्वसिद्धेः 'स्खदिरवपरिभ्यां चे'ति सूत्रमपि नियमार्थम् ।

...यमयन्' इत्यादि सम्यगेव। तपूरस्य एवेदेश्चेदवादिपूर्वस्य इति नियमात्प्रस्खा- इयतीत्याह। तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः। इदं च ...तं वृत्तिन्यासादिविरोधादुपेक्ष्यम्। ८२१ फण गतौ। न इति निवृत्तम् असम्भवात्। ...निषेधात्पूर्वमसौ न पठितः। फणादिकार्यानुरोधात्। २३५४ फणां च सप्तानाम् ।६।४।१२५॥ एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। फेणतुः। ...फेणुः। पफणतुः। पफणुः। फेणिथ–पफणिथ। फणयति। वृत्। घटादिः समाप्तः। ...फणेः प्रागेव वृदित्येके। तन्मते फाणयतीत्येव। ८२२ राजृ दीप्तौ। स्वरितेत्। राजति–राजते। रेजतुः–रराजतुः। रेजे–रराजे। अतः इत्यनुवृत्तावपि विधान-

...र्थ्य चेत् एवदेशित्वं तर्हि अवपरिभ्यां परस्यैव शित्वं नतूपसर्गान्तराविति। एवं च ...स्खलायतीत्यत्र मित्वाभावात् ह्रस्वः। अपस्खलयति परिस्खलयति इत्यत्र तु मि- ...त्वाद्ध्रस्व इति फलति। तदाह–उपसर्गस्येति। सोपसर्गस्येत्यर्थः। पूर्वमते तु अवप- ...रिभ्यां परस्य मित्त्वनिषेधादवस्खालयति परिस्खालयतीति न ह्रस्वः। प्रस्खलयती- ...त्यत्र तु अवपरिपूर्वकत्वाभावेन मित्वनिषेधाऽभावाद्ध्रस्व इति विपरीतम्। तस्मादि- ...ति। 'चमोऽपरिवेषणे' 'स्खदिरवपरिभ्यां चे'ति सूत्रद्वये उक्तरीत्या मित्वनियमविध्या ...श्रयणादुदाहरणप्रत्युदाहरणयोरुक्तरीत्या व्यत्यासः फलित इत्यर्थः। उपेक्ष्यमिति। 'न ...रादरभ्याक्' इति सूत्रव्याख्यावसरे 'चमोऽपरिवेषणे' इति मित्वं प्रतिषिध्यत' इति ...वृत्तिन्यासयोरुक्तत्वादिति भावः। केचित्तु स्वामिमते 'पर्यवसितं नियमय'त्यादि- ...ग्रामप्रस्यान्तावेवोपेक्ष्याविरत्याहुः। फण गताविति। ननु घटादित्वेऽपि नायं मित्, इतः ...प्राक् 'रवह अवतंसने, इत्युक्तमेव 'घटादयो मितः' इत्युक्तेः। अतः कथमत्र निषेधः ...इत्याह–न इति निवृत्तमसम्भवादिति। प्राप्तिं विना मित्वस्य निषेधाऽसम्भवादिहनेति ...नानुवर्तते, किन्तु मिदित्येवानुवर्तते इत्यर्थः। ननु फण गतावित्यत्र मिन्नेति यदि ...नानुवर्तते तर्हि 'न कम्यमिचमाम्'इति निषेधकाण्डात् प्रागेवाऽयं कुतो न पठितः। ...इत्याह–निषेधात्पूर्वमसौ न पठित इति। कुत इत्यत आह–फणादिकार्यानुरोधादिति। नि- ...षेधकाण्डात्प्रागेव फणेः पाठे कम्यमिचमादीनामपि फणादिष्वन्तर्भावः स्यादिति ...भावः। फणां च। 'अत एकहल्मध्ये'इत्यतो लिटीति 'थलि च सेटि'इति चानुवर्तते। ...'एत्वसोः' इत्यतः एदिति, 'गमहन–' इत्यतः कितीति, वा जॄभ्रमुत्रसाम्' इत्यतो वेति ...च। तदाह–एषामिति। फणादीनामित्यर्थः। फणामिति बहुवचनात् तदादिलाभः। ...'फण गतौ' इत्यत्र मिदित्येवानुवर्तते नेति तु नानुवर्तते इत्यस्य प्रयोजनमाह–फण- ...यतीति। वृदिति। कर्तरि क्विबन्तम्। वृतुधातुरिह समाप्त्यर्थकः। तदाह–घटादिः समाप्त ...इति। फणेः प्रागेवेति। एवं सति फणेरघटादित्वान्न मित्वमिति भावः। तदाह–तन्मते ...फाणयतीत्येवेति। इति घटादयः। राजृदीप्ताविति। इत आरभ्य फणामेत्वाभ्यासलोपौ ...फणादित्वात्पक्षे भवतः। तदाह–रेजतुरित्यादि। ननु 'फणां च सप्तानाम्'इत्यत्र अत

सामर्थ्यादात एत्त्वम् । ८२३ टु भ्राजृ ८२४ टु भ्राशृ ८२५ टु भ्लाशृ दी
अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः पूर्वं पाठस्तु मध्यादिषत्वाभावा
तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणम् । भ्रेजे । बभ्राजे । 'वा भ्राश–'
२२२१ ) इति श्यन् वा । भ्राश्यते—भ्राशते । भ्रेशे—बभ्राशे । भ्लाश्यते-
शते । भ्लेशे–बभ्लाशे । द्वावपीमौ तालव्यान्तौ । ८२६ स्यमु ८२७ स्वन
ध्वन शब्दे । स्यमादयः क्षरत्यन्ताः परस्मैपदिनः । स्येमतुः–सस्यमतुः ।
मीत् । स्वेनतु–सस्वनतुः । अस्वनीत्–अस्वानीत् । विष्वणति । अवष्व
सशब्दं भुङ्क्त इत्यर्थः । 'वेश्च स्वनः–' ( सू २२७४ ) इति षत्वम् । फ
गताः । दध्वनतुः । ८२९ षम ८३० ष्टम अवैक्लव्ये । सषाम । तष्टाम् ।
ज्वल दीप्तौ । 'अतो ल्रान्तस्य' ( सू २३३० ) अज्वालीत् । ८३२ चल कम
८३३ जल घातने । घातनं तैक्ष्ण्यम् । ८३४ टल ८३५ ट्वल वैक्लव्ये ।
ष्ठल स्थाने । ८३७ हल विलेखने ८३८ णल गन्धे । बन्धने इत्येके । ८३
गतौ । पलति । ८४० बल प्राणने धान्यावरोधने च । बलति । बेल
बेलुः । ८४१ पुल महत्त्वे । पोलति । ८४२ कुल संस्त्याने, बन्धुषु

---

श्यन्नुवृत्तेःकथमिह एत्वाभ्यासलोपाविस्यत आह–अत इत्यनुवृत्तावपीति । अत इति
नुवर्तते । तदनुवृत्तावपि फणादिसप्तानामपि वचनसामर्थ्याद् राजृधातोराकारस्य
त्वाभ्यासलोपस्य विकल्पः स्यादेवेत्यर्थः । अत इति राजादिधातौ न सम्भव
सम्भवादिति यावत् । टु भ्राजृ टु भ्राशृ टुभ्लाशृ दीप्ताविति । टु इत् 'ट्वितोऽथुच्'
त्यर्थः । अनुदात्तेत इति । 'एते त्रय' इति शेषः । ननु पूर्वं चवर्गान्तेष्वनुदात्तेषु
तेः पाठात् पुनरपि तस्येह पाठः किमर्थं इत्यत आह—भ्राजतेरिति । तर्हि 'पू
भ्राजृ दीप्तौ' इति भ्राजेः पूर्वं पाठो व्यर्थं इत्यत आह—पूर्वपाठस्त्विति । एतावा
इति । 'भ्रस्जभ्रस्जे'ति षत्वविधौ भ्राजेर्ग्रहणाऽभावार्थं इत्यर्थः । ननु पूर्वं पठितस्य
षत्वविधौ कुतो न ग्रहणमित्यत आह—तत्र हीति । षत्वविधौ हीत्यर्थः । एत्वा
सलोपयोः पाक्षिकत्वादाह—भ्रेजे बभ्राजे इति । द्वावपीमाविति । द्वितीयतृतीयावि
ननु 'विष्वणती'त्यत्र कथं षत्वम्? केवलधन्त्वाऽभावात्साङ्गित्वाऽभावेन षषोपदेश
आदेशसकारत्वाभावात्, अवष्वणतीत्यत्र इण्कवर्गाभ्यां परत्वाभावाच्च षत्व
प्रसक्तिः । 'सात्पदाद्यो'रिति निषेधाच्चेत्यत आह—वेश्च स्वन इतीति । तत्र च
अवाच्चेत्यपि लभ्यत इति भावः । फणादयो गता इति । ध्वजलेः प्रागिति शेषः
श्च स्वनेन फणादिकार्यमिति भावः । तदाह—दध्वनतुरिति । षम ष्टमेति । षोपदे
तस्तामेति । सत्वे सति ष्टुत्वनिवृत्तिरिति । तैक्ष्ण्यमिति । तीक्ष्णीभवनमित्यर्थः ।
ट्वल वैक्लव्ये इति । वैक्लव्यं मयादिजनितो व्यग्रीभावः । णल गन्धे इति । णोपदे

संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल । ८४३ शल ८४४ हुल ८४५ पत्लृ गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता । २३५५ पतः पुम् ७।४।१९ ॥ अङि परे । अपप्तत् । 'नेर्गद-' (सू २२८५) इति णत्वम् । प्रण्यपप्तत् । ८४६ क्वथे निष्पाके । क्वथति । चक्वाथ । अक्वथीत् । ८४७ पथे गतौ । अपथीत् । ८४८ मथे विलोडने । मेथतुः । अमथीत् । ८४९ टुवम् उद्गिरणे । इहैव निपातनात् ऋत इत्वमिति सुधाकरः । ववाम । ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । ८५० भ्रमु चलने । 'वा भ्राश-' ( सू २३२१ ) इति श्यन्वा । भ्रम्यति-भ्रमति । भ्राम्यति' इति दिवादौ वक्ष्यते । २३५६ वा जॄभ्रमुत्रसाम् ६।४। १२४। एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः बभ्रमतुः । अभ्रमीत् । ८५१ क्षर सञ्चलने । अक्षारीत् ।

अथ द्वावनुदात्तेतौ । ८५१ षह मर्षणे । 'परिनिविभ्यः—' (सू २२७५) इति षत्वम् । परिषहते । सेहे । सहिता । 'तीषसह-' ( सू० २३४० ) इति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः । २३५७ सहिवहोरोदवर्णस्य ६।३।११२ ॥

---

यम् । गन्धः-गन्धक्रिया । तद्व्यापार इति । बन्धुतानुकूलो विवाहादिव्यापार इत्यर्थः । पत्लृधातुस्तवर्गप्रथमान्तः सेट्कः । लुङि लृदित्वात् च्लेरङि कृते अपत् अत् इति स्थिते—पतः पुम् । शेषपूरणेन सूत्रं व्याचष्टे—अङि परे इति । 'ऋदृशोऽङि' इत्यतः तदनुवृत्तेरिति भावः । पतेः पुम् स्यादङि परे इति फलितम् । पुमि मकार इत् उच्चारणार्थः । मित्त्वादन्त्यादचः परः । तदाह—अपप्तदिति । कथे निष्पाके इति । जलतोरघृताद्दीनां पाकभागाद्विशोषणपर्यन्तः पाको निष्पाकः । अकथीदिति । एदित्वान्नवृद्धिः । एवं अमथीत् । टु वम् उद्गिरणे इति । टुरित् । नायमुदित् । तेन 'उदितो वा' इति क्त्वायामिड्विकल्पो न । 'गॄ निगरणे' इति दीर्घान्तोऽयम् । नन्वस्मादात्तोल्युटि 'ॠत इद्धातोः' इति इत्त्वं बाधित्वा परत्वात् 'सार्वधातुक' इति गुणे सति 'उद्गिरण' इत्येव निर्देशो युज्यत इत्यत आह-इहैवेति । उद्गिरण इत्यर्थनिर्देशः पाणिनीय इति सुधाकरो मन्यते । भ्रमु चलने इति । वक्रमार्गसंचारे इत्यर्थः । अयथार्थज्ञानेऽप्ययम् । 'उदितो वे'ति क्त्वायामिड्विकल्पार्थमुदित्वम् । वा जॄभ्रमु । 'अत एकहल्मध्ये' इत्यतो लिटि इति 'थलि च सेटि' इति चानुवर्तते । 'ह्म्यन्तक्षण' इत्यतः वृद्धिनि 'गमहन' इत्यतः क्वितीति च । तदाह—एषामिति । अभ्रमीदिति । 'ह्मयन्ते'ति न वृद्धिः । अक्षारीदिति । 'अतो हलादेर्लघोः' इति वृद्धिः ।

षह मर्षणे इति । अपराधे सत्यपि कोपाऽनाविष्करणं मर्षणम् । इडभावे इति । सह् ता इति स्थिते 'हो ढः' इति ढत्वं 'झषस्तथोः' इति तकारस्य धत्वम् । धस्य ष्टुत्वेन

अनयोरवर्णस्य ओः स्यात् ढलोपे सति । २३५८ सोढः ८ । ३ । ११५ ॥ सोढ
सहेः सस्य षत्वं न स्यात् । परिसोढा । २३५९ सिवादीनां वाऽड्व्यवायेऽपि
८ । ३ । ७१ ॥ परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि
पर्यषहत । पर्यसहत । ८५३ रमु क्रीडायाम् । रेमे । रेमिषे । रन्ता—रंस्
रंसीष्ट । अरंस्त ।

अथ कसन्ताः परस्मैपदिनः । ८५४ षद्लृ विशरणगत्यवसादनेषु । २३
पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनय—
पश्यर्च्छधौशीयसीदाः ७ । ३ । ७८ ॥ पादीनां पिबादयः स्युरित्संज्ञकशका
प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ—ससत्थ । सत्ता । सत्स्यति ।
दित्वादङ् । असदत् । 'सदिरप्रतेः' ( सू २२७१ ) । निषीदति । न्यषीदत् । २३

---

ढः । 'ढो ढे लोपः' इति पूर्वस्य ढस्य लोप इत्यर्थः । सढा इति स्थितम् । सहिव
ढलोपे इति । 'ढ्लोपे' इत्यतः तदनुवृत्तेरिति भावः । 'रलोपे' इति तु ना
र्तते, असम्भवात् । तथा च सकारादकारस्य ओत्वे सोढेतिरूपम् । 'परिसोढे
'परिनिविभ्य' इति षत्वे प्राप्ते । सोढः । 'सोढ' इति सहेरोत्वसम्पन्नस्य षष्ठ्यन्त
'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'न रपर' इत्यतो नेति
'मूर्धन्य' इत्यधिकृतम् । तदाह—सोढ्रूपस्येत्यादिना । सिवादीनाम् । 'परिनिवि
इति सूत्रादुत्तरमिदं सूत्रम् । तदाह-परिनिविभ्यः परेषामिति । 'सिवुसहसुट्स्तुस्व
मिति शेषः । रमु क्रीडायामिति । नायमुदिदिति माधवः । केचित्तु उदितं मत्वा 'उ
वा' इति क्त्वायामिड्विकल्पमिच्छन्ति । अनिट्कोऽयम् । लिटि क्रादिनियमादि
तदाह — रेमिषे इति ।

अथ कसन्ता इति । 'कस गतौ' इत्येतत्पर्यन्ता इत्यर्थः । षद्लृधातुः षोपदेश
लिट्कश्च । लटि शपि सद् अ ति इति स्थिते - पाघ्राध्मा । पा घ्रा ध्मा स्था म्ना
दृशि अर्ति सर्ति शद् सद् एषां द्वन्द्वात् षष्ठीबहुवचनम् । पिब जिघ्र धम तिष्ठ
यच्छ पश्य ऋच्छ धौ शीय सीद एषां द्वन्द्वात् प्रथमाबहुवचनम् । यथासङ्ख्यमादे
'ष्ठिवुक्लमु' इत्यतः शितीत्यनुवर्तते । श् चासौ इच्चेति कर्मधारयः । अङ्गाक्षिप्त
प्रत्ययविशेषणत्वात् तदादिविधिः । तदाह—इत्संज्ञकेति । ससादेति । इत्संज्ञकशकारादित्वे
स्याऽभावात् न सीदादेशः । श् इत् यस्य सः शित् । शितीति बहुव्रीहावर्थे
पाधातोः कर्मणि लिटि एशि आल्लोपे 'पपे' इत्यत्रापि पिबादेशः स्यादिति बोध्य
थलि क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधेऽपि भारद्वाजनियमा
तत्र इट्पक्षे 'थलि च सेटी'त्येत्वाभ्यासलोपौ । तदाह—सेदिथ । ससत्थेति । सेदि
सेदिम । क्रादिनियमादिट् । न्यषीददिति । 'प्राक्सितादड्व्यवायेऽपि' इति षत्व

सदेः परस्य लिटि ८।३।११८ ॥ सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । निषेदतुः । ८५५ शद्लृ शातने । विशीर्णतायामयम् । शातनं तु विषयतया निर्दिश्यते । २३६२ शदेः शितः १।३।६० ॥ शिद्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद । शेदतुः । शेदिथ-शशत्थ । शत्ता । अशदत् । ८५६ क्रुश आह्वाने रोदने च । क्रोशति । क्रोष्टा । च्लेः क्सः । अक्रुक्षत् । ८५७ कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । ८५८ बुध अवगमने । बोधति । बोधिता । बोधिष्यति । ८५९ रुह बीजजन्मनि प्रादुर्भावे च । रोहति ।

---

'निषसादे'त्यत्र अभ्यासात् । परस्य 'स्थादिष्वभ्यासेन' इति षत्वे प्राप्ते—सदेः परस्य । 'न रपर' इत्यतः नेत्यनुवर्तते । 'मूर्धन्य' इत्यधिकृतम् । सदेरित्यवयवषष्ठी । परशब्द उत्तरखण्डपरः । सदेरुत्तरखण्डस्य षत्वं नेति लभ्यते । फलितमाह—सदेरभ्यासात्परस्येति । शद्लृ शातने इति । ननु शद्धातोरस्मात् हेतुमण्ण्यन्तात् ल्युटि 'शदेरगतौ तः' इति दकारस्य तकारे शातनशब्दः । तथा च शातनं शीर्णतानुकूलक्रियेति फलति । एवं च सकर्मकत्वापत्तौ विशीर्यतीत्यर्थे शीयत इति वक्ष्यमाणमुदाहरणं कथमित्यत आह—विशीर्णतायामिति । विशरणे इत्यर्थः । तर्हि कथं शातनमिति हेतुमण्णिजित्यत आह—शातनं तु विषयतयेति । विपूर्वात् 'षिञ् बन्धने' इत्यस्मात् विषयशब्दः । अविनाभावेनेत्यर्थः । प्रयोजकव्यापारं विना विशरणस्याऽसम्भवात् शातननिर्देशः । ण्यर्थस्याऽविवक्षितत्वात् विशरणमेव शद्लृधात्वर्थ इति यावत् । शदेः शितः । 'अनुदात्तङितः' इत्यस्मादात्मनेपदमित्यनुवर्तते । श् इत् यस्य सः शित् । शप् विवक्षितः । शिति विद्यते सतीत्यर्थः, तिङुत्पत्तेः पूर्वं सार्वधातुकाश्रयस्य शपोऽसम्भवात् । तदाह—शिद्भाविन इति । शित् भावी भविष्यन् यस्मात्स शिद्भावी तस्मादित्यर्थः । शीयते इति । शपि शदेः शीयादेशः । विशीर्यतीत्यर्थः । शीयेते शीयन्ते इत्यादिः । शिद्विषयादित्युक्तेर्लिटि नात्मनेपदम् । 'इत्संज्ञकशकाराद्'इत्युक्तेर्न शीयादेशः । तदाह—शशादेति । अनिट्कोऽयम् । क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधात्थलि भारद्वाजनियमात् । वेट् । तदाह—शेदिथ शशत्थेति च । इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपाविति भावः । शेदिव । शेदिम । क्रादिनियमादिट् । अशददिति । लृदित्त्वादङिति भावः । क्रुशधातुरनिट्कः । चुक्रोशिथ । क्रादिनियमात्थलि नित्यमिट् । अवन्ताऽकारवत्त्वाभावान्न भारद्वाजनियमः । चुक्रुशिव । चुक्रुशिम । क्रोष्टेति । व्रश्चादिना शस्य षत्वे ष्टुत्वेन तकारस्य टः । च्लेः क्सः इति । इगुपधशलन्तत्वादिति भावः । अक्रुक्षदिति । व्रश्चादिना शस्य षः । 'षढोः' इति षस्य कः, सस्य षत्वम् । क्सस्य कित्त्वान्न गुणः । कुच सम्पर्चनेति । 'कुच शब्दे' इति पठितस्य पुनरिह पाठः सम्पर्चनादावेव ज्वलादिकार्यणप्रत्ययार्थः । अर्थनिर्देशः क्वचित्पाणिनीय इति भूधातौ प्रपञ्चितम् । बुध अवगमने इति । सेट्कोऽयम्, अनिट्सु श्यन्विकरणस्यैव बुधेर्ग्रहणात् । तदाह—बोधितेति ।

रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् । ८६० कस गतौ । अकासी
अकसीत् । वृत् । ज्वलादिगणः समाप्तः ।

अथ गूहत्यन्ताः स्वरितेतः । ८६१ हिक्क अव्यक्ते शब्दे । हिक्कति-हिक्क
८६२ अञ्चु गतौ याचने च । अञ्चति-अञ्चते । अचु इत्येके । अचि इत्यपरे
८६३ टु याचृ याच्ञायाम् । याचति-याचते ८६४ रेट्ट परिभाषणे । रेटति
रेटते । ८६५ चते ८६६ चदे याचने । चचात—चेते । अचतीत् । चचा
चेदे । अचदीत् । ८६७ प्रोथृ पर्याप्तौ । पुप्रोथ । पुप्रोथे । ८६८ मिदृ ८
मेदृ मेधाहिंसनयोः । मिमेद—मिमिदे । थान्ताविमौ इति स्वामी । मिमेथ ।
न्तौ इति न्यासः । ८७० मेधृ सङ्गमे च । मेधति । मिमेधे । ८७१ णिदृ ८
णेदृ कुत्सासन्निकर्षयोः । निनेद । निनिदतुः । निनिदे । निनेदे । ८७३ शृधु ८
मृधु उन्दने । उन्दनं क्लेदनम् । शर्धति—शर्धते । शर्धिता । मर्धति-मर्धते । ८
बुधिर् अवबोधने । बोधति—बोधते । इरित्वादङ्वा । अबुधत्—अबोधीत्—
बोधिष्ट । 'दीपजन—' ( सू २३२८ ) इति चिण्तु न भवति । पूर्वोत्तरसाहच
दैवादिकस्यैव तत्र ग्रहणात् । ८७६ उबुन्दिर् निशामने । निशामनं ज्ञान
बुबुन्दे । अबुदत्—अबुन्दीत् । ८७७ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणे

---

अबोधीत् । वहणातुरनिट्कः । क्रादिनियमात्थल्यपि नित्यमिट् । अजन्तोऽकारवत
आवात् न भारद्वाजनियमः । रोढेति । लुटि तासि गुणे ढत्वधत्वष्टुत्वढलोपाः । रो
वीति । लृटि स्ये ढकषाः । अरुक्षदिति । इगुपधशलन्तत्वात् क्से ढकषाः किप
गुणः । वृदिति । 'ज्वलितिकसन्तेभ्यः' इति उत्तरावधेरपि कसेर्ग्रहणादेव सि
वृत्करणं स्पष्टार्थमित्याहुः । इति ज्वलादयः ।

गूहत्यन्ता इति । 'गुहू संवरणे' इत्येतत्पर्यन्ता इत्यर्थः । चते चदे याचने । अ
दिति । एदित्वान्न वृद्धिः । एवमचदीत् । बुधिर् अवबोधने इति । 'बुध अवगमने' ।
केवलपरस्मैपदी गतः स तु ज्वलादिकार्यार्थः । अयं तु इरित् स्वरितेत् । अनि
श्यन्विकरणस्यैव पाठादयं सेट् । अबुधदिति । इर इत्स्वेऽपि तदवयवस्य इकारस्य
कमित्त्वाभावान्न नुम् । स्वरितेत्त्वप्रयुक्तमात्मनेपदं तु भवत्येव, स्वरितेत्त्वं पा
सर्वाव, वस्तुतस्तु इकारस्य प्रत्येकमित्त्वेऽपि न नुम् । 'इदितो नुम्'मित्यत्र कर्मा
समाश्रित्य इत्संज्ञकेकारान्तस्यैव नुम्विधेः । पूर्वोत्तरेति । जनपूरित्साहचर्येणेत्य
उबुन्दिरिति । आद्य उकार इत् 'उदितो वे'ति क्त्वायामिड्विकल्पार्थः । अबुदि
इरित्वादङि 'अनिदिता'मिति नलोपः । इर इकारस्य प्रत्येकमित्संज्ञाविर
'अनिदिता'मित्यस्य इत्संज्ञकेकारान्तभिन्नानामित्यर्थाश्रयणाच्चेति शब्देन्दु
स्थितम् । वेणृ गतीति । वाद्यमानस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । स्वनुपात

वेणति-वेणते । नान्तोऽप्ययम् । ८७८ खनु अवदारणे । खनति-खनते । २३६३ गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८॥ एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः । 'ये विभाषा' ( सू २३१९ )। खायात्-खन्यात् । ८७९ चीवृ आदानसंवरणयोः । चिचीव-चिचीवे । ८८० चायृ पूजानिशामनयोः । ८८१ व्यय गतौ । अव्ययीत् । ८८२ दाशृ दाने । ददाश-ददाशे । ८८३ भेषृ भये । गतौ इत्येके । भेषति-भेषते । ८८४ भ्रेषृ ८८५ भ्लेषृ गतौ । ८८६ अस गतिदीप्त्यादानेषु । असति-असते । आस-आसे । अयं षान्तोऽपि । ८८७ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रथनम् । स्पशति—स्पशते । ८८८ लष कान्तौ । 'वा भ्राश—' ( सू २३२१ ) इति श्यन्वा । लष्यति—लषति । लेषे । ८८९ चष भक्षणे । ८९० छष हिंसायाम् । चच्छषतुः । चच्छषे । ८९१ झष आदानसंवरणयोः । ८९२ भ्रक्ष ८९३ भ्लक्ष अदने । भक्ष इति मैत्रेयः । ८९४ दासृ दाने । ८९५ माहृ माने । ८९६ गुहू संवरणे । २३६४ ऊदुपधाया गोहः ६।४।८९॥ गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये । गूहति—गूहते । ऊदित्वाद्वेट् । गूहिता—गोढा । गूहिष्यति—घोक्ष्यति । गूहेत् । गुह्यात् ।

---

क्त्वायामिड्विकल्पः । गमहन । उपधाया इति । 'ऊदुपधायाः' इत्यतः तदनुवृत्तेरिति भावः । अजादाविति । 'अचि श्नुधात्वि'त्यतः अनुवृत्तस्य अचि इत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ इति भावः । क्ङितीत्युक्तेः चखानेत्यत्र नोपधालोपः । अनङीति किम् । अगमत् । चख्ने । चख्नाते इत्यादि । व्यय गताविति । अयं क्षित्त्यागेऽपि, अर्थनिर्देशस्योपलक्षणत्वात् । अव्ययीदिति । ह्म्यन्तेति न वृद्धिः । चष भक्षणे इति । चचाष, चेषतुः । छष हिंसायामिति । वैरूप्यसम्पादकादेशादित्वादेत्वाभ्यासलोपौ न । तदाह—चच्छषतुः इति । गुहू संवरणे इति । लघूपधोऽयम् । ऊदित् । ऊदुपधायाः । 'गोह' इति कृतलघूपधगुणस्य गुहेर्निर्देशः । ततश्च गुणविषय एवेदं भवति । अचि श्नुधात्वित्यतः अनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः । तदाह—गुह उपधाया इत्यादिना । गुणहेताविति । गुणं प्रति परनिमित्तभूत इत्यर्थः । गुणापवादः । जुगूह । गुणहेताविति किम् । जुगुहतुः । जुगुहुः । जुगुहे । जुगुहाते । जुगुहिरे । जुगूहिथ-जुगोढ । ढत्वधत्वष्टुत्वढलोपाः । जुगुहथुः । जुगुह । जुगुहिषे-जुघुक्षे । ढत्वभष्भावकत्वषत्वानि । जुगुहाथे । जुगुहिध्वे—जुघुढ्वे । जुगूह । जुगुहिव-जुगुह्व । जुगुहिम-जुगुह्म । जुगुहे । जुगुहिवहे-जुगुह्वहे । जुगुहिमहे-जुगुह्महे । इति लिटि रूपाणि सिद्धवत्कृत्य लुटि इट्पक्षे ऊत्वे रूपमाह-गूहितेति । इडभावे झलादिप्रत्ययाऽभावात् ऊत्वाऽभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रूपमाह—गोढेति । लृटि स्ये इट्पक्षे ऊत्वे रूपमाह—गूहिष्यतीति । इडभावे तु गुणढत्वभष्भावकत्वेषु रूप-

अगूहीत्। इडभावे क्सः। अघुक्षत। २३६५ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३॥ एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। ढत्वघत्वष्टुत्वढलोपदीर्घाः। अगूढ-अघुक्षत। 'क्सस्याचि' (सू २३३७) इत्यन्त्यलोपः। अघुक्षाताम्। अघुक्षन्त। अगुह्वहि-अघुक्षावहि। अघुक्षामहि।

अथाजन्ता उभयपदिनः। ८९७ श्रिञ् सेवायाम्। श्रयति—श्रयते। शिश्रियतुः। श्रयिता। 'णिश्रि—' (सू २३१२) इति चङ्। अशिश्रियत्। ८९ भृञ् भरणे। भरति। बभार। बभ्रतुः। बभर्थ। बभृव। बभृषे। भर्ता। २३६

आह-घोक्ष्यतीति। गूहिष्यते, घोक्ष्यते इत्यप्युदाहार्यम्। गूहतु। गूहताम्। अगूहत्। अगूहत। गूहेदिति। 'गूहेते'त्यपि ज्ञेयम्। गुह्यादिति। आशीर्लिङि अजादिप्रत्ययाभावादूत्वं न। कित्वान्न गुणः। लुङि इट्पक्षे सिज्लोपे ऊत्वे रूपमाह—अगूहीदिति। अगूहिष्टाम्। अगूहिषुरित्यादि। इडभावे क्सः इति। इगुपधशलन्तत्वादिति भावः। अघुक्षदिति। ढत्वभष्भावकत्वषत्वानि। अघुक्षाताम्। अघुक्षन्नित्यादि। लुङस्तौ विशेषमाह—लुग्वा दुह। दन्त्ये तङीति। दन्त्यादौ तङीत्यर्थः। प्रत्ययाऽदर्शनस्यालोपादेशोऽयं लुक्। अगूढेति। अगुह् स त इति स्थिते क्सस्य कित्वेन गुणहेतुत्वाभावादजादित्वाभावाच्च ऊत्वाभावे क्सलुकि अगुह् त इति स्थिते प्रक्रियां दर्शयति-ढत्वघत्वष्टुत्वढलोपदीर्घा इति। अघुक्षतेति। क्सलुगभावे ढत्वभष्भावकत्वषत्वानीति भावः। अघुक्षातामिति। च्लेः क्सादेशे क्सस्य कित्वेन गुणहेतुत्वाभावादूत्वाभावे ढत्वभष्भावकत्वषत्वेषु कृतेषु 'क्सस्याची'त्यन्त्यलोपे अतः परत्वाभावादातो ङित इति न भवतीति भावः। अघुक्षन्तेति। क्सस्य अजादित्वाभावात्तस्मिन्परे क्सस्यान्त्यलोपाभावादतः परत्वाऽभावात् 'आत्मनेपदेष्वनत' इत्यदादेशो न भवति। कृते तु झोऽन्तादेशे क्सस्याऽन्त्यलोप इति भावः। अघुक्षथाः। अघुक्षाथाम्। अघुक्षध्वम्। अघुक्षि। इति रूपाणि सिद्धवत् कृत्याह-अगुह्वहीति। दन्त्यादिप्रत्ययपरत्वात् क्सस्य लुकि अजादिप्रत्ययाभावाच्च ऊत्वाभावे रूपम्। अघुक्षावहीति। क्सलुगभावे ढत्वभष्भावकत्वषत्वानि। अतो दीर्घश्च। अघुक्षामहीति। दन्त्यादिप्रत्ययपरत्वाभावान्न क्सलुक्। इति गूहत्यन्ताः स्वरितेतः।

उभयपदिन इति। ञित्वादिति भावः। श्रिञ्धातुः सेट्। शिश्रियतुरिति। कित्त्वान्न गुणः। इयङ्। शिश्रियुः। शिश्रयिथ। शिश्रियथुः। शिश्रिय। शिश्राय-शिश्रय। शिश्रियिव। शिश्रियिम। शिश्रिये। शिश्रियाते। शिश्रियिरे। शिश्रियिषे। शिश्रियिध्वे-शिश्रियिढ्वे। शिश्रिये। शिश्रियिवहे। शिश्रियिमहे। श्रयितेति। श्रयिष्यति। श्रयिष्यते। श्रयतु। अश्रयताम्। अश्रयत्। अश्रयत। श्रयेत्। श्रीयात्। श्रयिषीष्ट। लुङि विशेषमाह—णिश्रीति। अशिश्रियदिति चङीति द्वित्वम्। अशिश्रियत। अश्रयिष्यत्-अश्रयिष्यत। भृञ् धातुरनिट्। भरतीति। भरते।

ऋद्धनोः स्ये ७।२।७०॥ ऋतो हन्तेश्च स्यस्य इट् स्यात्। भरिष्यति। २३६७ रिङ् शयग्लिङ्क्षु ७।४।२८॥ शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात्। रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न। भ्रियात्। २३६८ उश्च १।२।१२॥ ऋवर्णात्परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्। अभार्ष्टाम्। अभार्षुः। २३६९ ह्रस्वादङ्गात् ८।२।२७॥ सिचो लोपः स्याज्झलि। अभृत। अभृषाताम्। अभरिष्यत्। ८९९ हृञ् हरणे। हरणं

शेषवत्। बभर्तुरिति। किरवान्न गुणः। यण्। बभ्रुः। थलादौ 'एकाच' इति नेट्, कृसृभृवृस्तुद्रुस्रुश्रुषु लिट्यपि तन्निषेधस्य प्रवृत्तेः। थलि 'अचस्तास्वत्'दिति निषेधाच्च, ऋदन्तेषु भारद्वाजमतेऽपि थलि निषेधाच्च। तदाह—बभर्थेति। बभ्रथुः। बभ्र। बभार-बभर। इति सिद्धवत्कृत्याह—बभृवेति। बभृम। बभ्रे। बभ्राते। बभ्रिरे। इति सिद्धवत्कृत्याह—बभृषे इति। बभ्राथे। बभृढ्वे। बभ्रे। बभृवहे। बभृमहे। लृटि स्ये इण्निषेधे प्राप्ते—ऋद्धनोः। ऋत् हन् अनयोर्द्वन्द्वात्। पञ्चम्यर्थे षष्ठी। 'स्ये' इति षष्ठ्यर्थे सप्तमी। 'आर्द्धधातुकस्ये'डित्यतः इडित्यनुवर्तते। तदाह—ऋत इत्यादिना। 'एकाच' इति इण्निषेधस्यापवादः। भरिष्यतीति। भरिष्यते। भरतु। भरताम्। अभरत्। अभरत। भरेत्। भरेत। आशीर्लिङि परस्मैपदे भृ यात् इति स्थिते—रिङ् शय। श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम्। 'अयङ् यि क्ङिती'त्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विशेषणम्। तदादिविधिः। शे तु यीति नान्वेति, असम्भवात्। नापि यकि, अव्यभिचारात्। अतएव 'अकृत्सार्वधातुकयो'रित्यनुवृत्तमपि लिङ एव विशेषणम्। तदाह—शे यकीत्यादिना। ऋत इति। 'रीङृत' इत्यतः तदनुवृत्तेरिति भावः। अङ्गस्येत्यधिकृतम्। 'ऋत' इति तद्विशेषणम्। तदन्तविधिः। ऋदन्तस्याऽङ्गस्येति लभ्यते। आदेशे ङकार इत्। ङित्वात् अन्तादेशः। निर्दिश्यमानपरिभाषयैव सिद्धे ङकारोच्चारणम्, इडागमेनैव सिद्धे रेफोच्चारणं च स्पष्टार्थम्। ननु भ्रियादिति वक्ष्यमाणमुदाहरणमयुक्तम्, कृते रिङि 'अकृत्सार्वधातुकयो'रिति दीर्घप्रसङ्गादित्यत आह—रीङि प्रकृते इति। कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिर्व्यर्थः स्यात्, 'रीङृत' इत्येव सिद्धेः। अतो रिङि कृते सति न दीर्घ इत्यर्थः। भ्रियादिति। भ्रियास्तामित्यादि सुगमम्। आशीर्लिङि भृषीष्टेत्यत्र गुणे प्राप्ते—उश्च। 'लिङ्सिचावात्मनेपदेषु' इति सूत्रमनुवर्तते। 'इको झल्' इत्यतो झलिति च। तदाह—ऋवर्णादिति। भृषीष्टेति। कित्वान्न गुणः। अभार्षीदिति। परस्मैपदे सिचि वृद्धौ रपरत्वम्। तङि तु अभृ स् त इति स्थिते—ह्रस्वादङ्गात्। ह्रस्वान्तादित्यर्थः। सिच इति भाष्यम्। 'झलो झलि' इत्यतो झलीति, 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—सिचो लोपः स्याज्झलीति। ह्रस्वात्किम्। अच्योष्ट। अङ्गात्किम्। अलाविष्टाम्। सिचः किम्। भित्राम्। भिन्त्याय। कुभन्तातरप्तमपौ।

प्रापणं स्वीकारः स्तेयं नाशनं च। जहर्थ। जह्रिव। जह्रिषे। हर्ता। हरिष्यति
९०० धृञ् धारणे। धरति। अधार्षीत्। अधृत। ९०१ णीञ् प्रापणे। निनयिथ
निनेथ। निन्यिषे।

अथाजन्ताः परस्मैपदिनः। ९०२ धेट् पाने। धयति। २३७० आदेच
उपदेशेऽशिति ६।१।४५॥ उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति

---

अभृतेति। 'उश्च' इति सिचः कित्त्वान्न गुणः। 'झलो' इत्युक्तेः अभृषाताम्, अभृषतेत्यत्र न सिज्लोपः। अनतः परत्वात् झस्य अदादेशः। अभृथाः। अभृषाथाम्। अभृढ्वम्। अभृषि। अभृष्वहि। अभृष्महि। हृधातुरनिट्। हरणं चतुर्विधमित्याह–प्रापणमित्यादि। तद्यथा—भारं हरति, प्रापयतीत्यर्थः। अंशं हरति, स्वीकरोतीत्यर्थः। परधनं हरति, चोरयतीत्यर्थः। पापं हरति हरते वा। नाशयतीत्यर्थः। जहार। जह्रतुः। जह्रुः। 'एकाचः' इति इण्निषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते 'अचस्तास्वत्' इति तन्निषेधः। ऋदन्तत्वेन भारद्वाजमतेऽपि इण्-निषेध एवेत्याह—जहर्थेति। जह्रथुः। जह्र। जहार-जहर। इति सिद्धवत्कृत्याह—जह्रिवेति। क्रादिनियमादिट्। जह्रिम। जह्रिषे। क्रादिनियमादिट्। जह्राथे। जह्रिढ्वे – जह्रिध्वे। जह्रिवहे। जह्रिमहे। लुङादिषु भृञ इव रूपाणि। धृञ् धातुरनिट्। हृञ इव रूपाणि। णीञ् धातुरनिट् णोपदेशः। नयति-नयते। निनाय। निन्यतुः। निन्युः। क्रादिनियमाल्लिटि इट्। थलि तु 'अचस्तास्वत्' इति इण्निषेधस्य भारद्वाजनियमात् विकल्प इत्यभिप्रेत्याह—निनयिथ निनेथेति। निन्यिषे। निन्याथे। निन्यिढ्वे-निन्यिध्वे। निन्ये। निन्यिवहे। निन्यिमहे। नेता। नेष्यति। नेष्यते। नयतु। नयताम्। अनयत्। अनयत। नयेत्। नयेत। नीयात्। नेषीष्ट। अनैषीत्। अनेष्ट। अनेष्यत्। अनेष्यत। इत्यजन्ता उभयपदिनो गताः।

परस्मैपदिन इति। 'जि ज्रि अभिभवे इत्येतत्पर्यन्ता' इति शेषः। धेट् पाने इति। 'टिड्ढाणञ्'इत्यादौ ङीबर्थं टित्त्वम्। अवयवे टित्त्वस्य व्यर्थतया समुदायार्थत्वादिति भावः। इत्युक्तः। आदेचः। एजन्तस्य धातोरिति। 'लिटि धातोः' इत्यतः धातोरित्यनुवृत्तं एचा विशेष्यते, तदन्तविधिरिति भावः। न तु शितीति। श् चासौ इच्चेति कर्मधारयात् सप्तमी, प्रत्ययविशेषणत्वात्तदादिविधिः, इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते। 'स्यपि च' 'न ल्यपि लिटि' इत्यादिपूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्त्या प्रत्यये इति विशेष्यलाभः। 'अशिती'ति न पर्युदासः। तथा सति शिद्भिन्ने 'प्रत्यये' परे इति स्यात्। ततश्च 'सुग्लः' इत्यत्र ग्लैधातोः 'आतश्चोपसर्गे' इति कप्रत्ययो न स्यात् कप्रत्ययनिमित्तमात्वम्, आदन्तात्प्रत्यय इत्यन्योन्याश्रयात्। 'शिति नेति' प्रसज्यप्रतिषेधे तु आत्वस्य अनैमित्तिकतया कप्रत्ययनिमित्तत्वाऽभावात् प्रथममात्वे कृते कप्रत्ययः सूपपादः। शितीति बहुव्रीह्याश्रयणे ग्लैधातोर्भावे लिटि 'भावकर्मणो'

२३७१ आत औ णलः ७। १। ३४ ॥ आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ । २३७२ आतो लोप इटि च ६।४।६४॥ अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' (सू २२४३) इति निषेधः । द्वित्वे कृते आल्लोपः । दधतुः । दधुः । दधिथ-दधाथ । दधिव । दधिम । धाता । २३७३ दाधा घ्वदाप् १। १। २० ॥ दारूपा धारूपाश्च धातवो

---

वकि पुंसि भावे आतो लोपे 'जग्ले' इति न सिध्येत्, एशः शित्त्वेन तस्मिन्परे आत्वस्य निषेधात् । अतः कर्मधारयमाश्रित्य इत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थ आश्रितः । एवं च पर्युदासेऽपि न क्षतिः । इत्संज्ञकशकारादिभिन्नप्रत्यये विवक्षिते इत्याश्रयणेन ग्लुच इत्यत्र कप्रत्ययात्प्रागेव आत्वोपपत्तेः । उपदेशे किम् ? चेता, स्तोता । धातोः किम् ? गोभ्याम् । 'गमेडोः' इति डोप्रत्ययोपदेशात् उपदेशे यः एच् तदन्तत्वात् गो इत्यस्य प्राप्तिः । न च सेङादीनामुपदेशे एजन्तत्वाभावात् कथमात्वमिति वाच्यम्, 'उदीचां माङः' इति निर्देशेन 'नानुबन्धकृतमनेजन्तत्वम्' इति ज्ञापनादित्यास्तां तावत् । तथा च प्रकृते लिटि द्वित्वादौ दधा अ इति स्थिते—आत औ । औ इति लुप्तप्रथमाकम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । 'आत्' इति तद्विशेषणम् । तदन्तविधिः । तदाह—आदन्ताद्धातोरिति । णल् प्रकृतिश्च धातुरेवेति धातुग्रहणम् । तथा च णल औत्वे वृद्धौ रूपमाह—दधाविति । दधा अतुस् इति स्थिते आतो लोपः । 'आर्धधातुके' इत्यधिकृतम् । 'दीधी वेवीटाम्' इत्यतः अचि क्ङितीति चानुवर्तते । अचीत्यार्धधातुकविशेषणात्तदादिविधिः । क्ङिति अजाद्यार्धधातुके इति च आतो लोप इति लभ्यते । फलितमाह—अजाद्योरिति । इटः आर्धधातुकत्वं तु तदवयवत्वाद्बोध्यम् । क्ङितीति च इटो न विशेषणम्, इड्ग्रहणसामर्थ्यात् । इडित्यनेन उत्तमपुरुषैकवचनस्य इडागमश्च गृह्यते । अजाद्योः किम् ? ग्लैधातोः कर्मणि लटि यकि ग्लायते । आर्धधातुकयोः किम् ? यान्ति वान्ति । दधौ इत्यत्र तु क्ङित्त्वाभावान्नलोपः । सति तस्मिन् औत्वं न स्यात् । ननु धा अतुस् इति स्थिते द्वित्वात्परत्वादाल्लोपे सति एकाच्त्वाभावात् द्वित्वं न स्यादित्याशङ्क्य परिहरति—द्वित्वादित्यादिना । धेट्धातुरनिट् । भारद्वाजनियमात् थलि वेडित्याह—दधिथ दधाथेति । इट्पक्षे आल्लोपः । दधथुः । दध । दधौ । इति सिद्धवत्कृत्याह—दधिवेति । वसि क्रादिनियमादिटि आल्लोप इति भावः । दधिमेत्यपि एवं ज्ञेयम् । धातेति । लुटि आत्वे तासादि इति भावः । धास्यति । धयतु । अधयत् । धयेत् । आशीर्लिङि घुसंज्ञाकार्यं वक्ष्यन् घुसंज्ञां दर्शयति—दाधा घ्वदाप् । 'दा' इत्यनेन स्वाभाविकाऽऽकारान्तयोः 'डुदाञ् दाने' 'दाण् दाने' इत्यनयोः कृतात्वयोः 'दो अवखण्डने' 'देङ् रक्षणे' इत्यनयोः लाक्षणिकयोश्च, 'धा' इत्यनेन स्वाभाविकाऽऽकारान्तस्य 'डुधाञ् धारणपोषणयोः' इत्यस्य, लाक्षणिकस्य 'धेट् पाने' इत्यस्य च ग्रहणम् । 'गामादाग्रहणेष्वविशेषः' इति परिभा-

घुसंज्ञाः स्युर्दाप्दैपौ विना । २३७४ एर्लिङि ६।४।६७ ॥ घुसंज्ञानां मास्थादी
चैत्वं स्यादार्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः । २३
विभाषा धेट्श्व्योः ३।१।४९॥ आभ्यां च्लेश्चङ् वा स्यात्कर्तृवाचिनि लुङि प
'चङि' ( सू २३१५ ) इति द्वित्वम् । अदधत् । अदधताम् । २३७६ विभाषा
धेट्शाच्छासः २ । ४ । ७८ ॥ एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अधा
अधाताम् । अधुः । २३७७ यमरमनमातां सक्च ७।२।७३॥ एषां सक्
देभ्यः सिच इट् स्यात्परस्मैपदेषु । अधासीत् । अधासिष्टाम् । अधासिषुः ।

---

दाप्त्वात् तत्र दाग्रहणेन धारूपस्यापि ग्रहणाच्च । अत एव 'दो दद् घोः' इत्यत्र घो
इत्यर्थं दाग्रहणमर्थवत्, दधातेर्हिभावविधानादेव निवृत्तिसिद्धेः । तदाह–दाधा
रूपाश्चेति । एर्लिङि । एरिति प्रथमान्तम् । 'आर्धधातुके' इत्यधिकृतम् । 'घुमास्था
पाजहातिसाम्' इत्यनुवर्तते । घुमा स्था गा पा जहाति सा एषां द्वन्द्वात् । षष्ठीबहु
नम् । तदाह–घुसंज्ञानां मास्थादीनामिति । किति लिङीति । 'दीङो युडि'त्यतः । कि
इत्युक्तेरिति भावः । ङितीति नानुवर्तते । लिङार्धधातुकस्य ङित्त्वासंभवात् ।
च्लेः सिचि प्राप्ते—विभाषा धेट् । 'च्लि लुङी'त्यनुवर्तते । 'णिश्रिद्रुस्रुभ्यः'
कर्तरि चङिति च । तदाह—आभ्यामिति । धेट् श्वि आभ्यामित्यर्थः । अदधदि
चङि द्वित्वे आल्लोप इति भावः । अदधताम् । अदधन् । अदधः । अ
तम् । अदधत । अदधम् । अदधाव । अदधाम । चङभावपक्षे विशेषमा
विभाषा घ्रा । 'ण्यक्षत्रियार्ष' इत्यतः लुगित्यनुवर्तते । 'गातिस्था' इत्यतः '
परस्मैपदेष्विति' । तदाह—एभ्य–इति । 'घ्रा गन्धोपादाने' 'धेट् पाने' 'शो
करणे' 'छो छेदने' 'षो अन्तकर्मणि' एषां समाहारद्वन्द्वात्पञ्चम्येकवच
शोप्रभृतीनां कृतात्वानां निर्देशः । धेटः 'गातिस्थाघुपा' इति नित्यं
अन्येषामप्राप्ते वचनम् । अधुरिति । 'उस्यपदान्तात्' इति पररूपम् । अ
अधातम् । अधात । अधाम् । अधाव । अधाम । सिचो लुगभावपक्षे आ
यमरम । यम, रम, नम, आत् एषां द्वन्द्वात्षष्ठीबहुवचनम् । 'आ'दि
आदन्तं गृह्यते । तदाह—एषां सक् स्यादिति । सकि ककार इत्, अकार उच्चा
णार्थः । कित्त्वादन्तावयवः । चकारेण 'इडत्यर्ति' 'इत्यतः इडिति 'स्तुसुधूञ्भ्य' इ
परस्मैपदेष्विति चानुकृष्यते । 'अञ्जेः सिची'त्यतः सिचीति च । तच्च षष्ठ्या
रिणम्यते । तदाह—एभ्यः सिच इट् चेति । अधासीदिति । धातोः सगागमः ।
इट्, ईट् । 'इट ईटि' इति सिज्लोपः । अधासिष्टामिति । अपृक्तत्वाऽभावादीडभा
सिज्लोपः । सस्य षत्वे तकारस्य ष्टुत्वेन टः । अधासिषुरिति । अधासीः । अधासि
अधासिष्ट । अधासिषम् । अधासिष्व । अधासिष्म । यद्यपि अधासीदित्यत्र
टोर्विधिर्व्यर्थं एव, तथापि अधासिष्टामित्याद्यर्थमत्र आतः सगिड्विधानम् । धमा

ग्लै ९०४ म्लै हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ—जग्लाथ । २३७८ वाऽन्यस्य संयोगादेः ६।४।६८॥ घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । ग्लायात् । ग्लेयात् । अग्लासीत् । म्लायति । ९०५ द्यै न्यक्करणे । न्यक्करणं तिरस्कारः । ९०६ द्रै स्वप्ने । ९०७ ध्रै तृप्तौ । ९०८ ध्यै चिन्तायाम् । ९०९ रै शब्दे । ९१० स्त्यै ९११ ष्ट्यै शब्दसङ्घातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासति, अतिष्ट्यपदित्यत्र षत्वम् । ९१२ खै खदने । ९१३ क्षै ९१४ जै

---

तु अयंसीदित्यादौ हलन्तलक्षणवृद्धिनिरासार्थम्, अयंसिष्टामित्याद्यर्थं च तदेतत् तत्तद्लुङ्क्षु स्पष्टीभविष्यति । अयास्यत् । ग्लै म्लै हर्षक्षये । धातुक्षय इति । बलक्षय इत्यर्थः । अनिटाविमौ । ग्लायतीति । शपि आयादेशः । शित्त्वविषयत्वादात्त्वं न । जग्लाविति । णलि आत्त्वे 'आत औ णलः' इति औत्वे वृद्धिरिति भावः । अतुसादौ द्वित्वे कृते आतो लोपः । जग्लतुः । जग्लुः । भारद्वाजनियमात्थलि वेडित्याह—जग्लिथ जग्लाथेति । इट्पक्षे आल्लोपः । जग्लथुः । जग्ल । जग्लौ । जग्लिव । जग्लिम । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । आशीर्लिङि आत्त्वे कृते ग्ला यात् इति स्थिते—वाऽन्यस्य । आर्द्धधातुक इत्यधिकृतम् । 'लिङि' इत्यनुवर्तते । 'ए'रिति प्रथमान्तम् । 'आतो लोप इटि च' इत्यतः 'आत' इत्यनुवर्तते । कस्मादन्यस्येत्यपेक्षायां घुमास्थागापाजहातिसां हलीति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते । तदाह—घुमास्थादेरित्यादिना । कितीति । 'दीङो युडचि क्ङिति' इत्यतः तदनुवृत्तेरिति भावः । ङितीति तु नानुवर्तते, लिङार्द्धधातुकस्य ङित्त्वाऽसम्भवात् । अग्लासीदिति । 'यमरम'इत्यादन्तत्वात् सगिटौ । अग्लासिष्टाम् । अग्लासिषुरित्यादि । अग्लास्यत् । म्लायतीति । ग्लैधातोरिव रूपाणीति भावः । द्यै न्यक्करणे इति । दकारमध्योऽयम् । इत आरभ्य ऐकारान्तानां संयोगादीनां ग्लैवदेव रूपाणि प्रत्येतव्यानि । रै 'शब्दे' इत्यादीनां तु असंयोगादीनाम् आशीर्लिङि 'वाऽन्यस्य संयोगादेः' इत्येत्वं न भवति, तेन रायादित्यादि रूपमिति विशेषः । स्त्यै ष्ट्यै इति । षोपदेशेषु स्त्याधातोः पर्युदासादाद्यो न षोपदेशः । द्वितीयस्तु षोपदेशः । तकारस्य ष्टुत्वसम्पन्नटकारनिर्देशः । सत्वे कृते इति । 'धात्वादे'रिति षस्य सकारे सति निमित्ताऽपायात् ष्टुत्वनिवृत्तिरिति भावः । तिष्ट्यासतीति । ष्ट्यैधातोः कृतसत्वात् सनि आत्त्वे स्त्या स इति सन्नन्ताल्लटि तिपि शपि 'सन्यङोः' इति द्वित्वे 'शर्पूर्वाः खयः' इति सकारयकारनिवृत्तौ 'तास्त्यासति' इति स्थिते अभ्यासह्रस्वे 'सन्यतः' इति इत्वे सकारस्य इणः परत्वादादेशसकारत्वाच्च षत्वे 'तिष्ट्यासती'ति रूपम् । स्वाभाविकसकारादित्वे त्वादेशसकारादित्वाऽभावात् षत्वं न स्यादिति भावः । अतिष्ट्यपदिति । ष्ट्यैधातोः कृतसत्वात् णौ आत्त्वे 'अर्तिह्री' इति पुकि स्त्यापि इति ण्यन्तात् लुङि अडागमे तिपि 'इतश्च'

९१५ षै क्षये । क्षायति । जक्षौ । क्षसौ । क्षाता । 'घुमास्था—' ( सू २४६२ ) इत्यत्र 'विभाषा घ्राधेट्—' ( सू २३७६ ) इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य । एत्वसिज्लुकौ न । क्षायात् । अक्षासीत् । ९१६ कै ९१७ गै शब्दे । गेयात् । अगासीत् । ९१८ शै ९१९ श्रै पाके । ९२० पै ९२१ ओवै शोषणे । पायात् । अपासीत् । 'घुमास्था–' (सू २४६२) इतीत्वं, तदपवाद 'एर्लिङि' (सू २३७४) इत्ये- 'गातिस्था' (सू २२२३) इति सिज्लुक् च न । पारूपस्य लाक्षणिकत्वात् । ९२२ ष्टै वेष्टने । स्तायति । ९२३ ष्णै वेष्टने । शोभायां च इत्येके । स्नायति । ९२४ दैप् शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् । ९२५ पा पाने । 'पाघ्राध्मा—' (सू २३६०) इति पिबादेशः । तस्यादन्तत्वान्नोपधागुणः । पिबति

---

इति ह्रकारलोपे 'णिश्रिद्रुस्रुभ्यः' इति चङि 'णेरनिटि' इति णिलोपे 'णौ चङ्युपधायाः' इति ह्रस्वे 'चङि' इति द्वित्वे अभ्यासस्य ह्रस्वे 'शर्पूर्वाः' इति सकारथकारपराणां निवृत्तौ सत्यां 'सन्यतः' इति इत्वः परत्वादादेशसकारत्वाच्च सस्य षा तस्य ष्टुत्वे अतिष्ठिपदिति रूपम् । स्वाभाविकसकारत्वे स्वादेशसकारत्वाभाव षत्वं न स्यादिति भावः । जक्षौ ससाविति । जैधातोः सैधातोश्च णलि आत्वे द्वित्वा वृद्धिरिति भावः । ननु 'एर्लिङि' इत्यत्र 'घुमास्थागापाजहातिसाम्' इत्यनुवृ सैधातोराशीर्लिङि 'सायादि'त्यत्र एत्वं स्याद् । तथा लुङि सगिटोः असा असासिष्टामित्येव दृश्यते । तत्र 'विभाषा घ्राधेट्शाच्छासः' इति सिचः पाक्षिके लु असात् असातामित्यपि प्रसज्येतेत्यत आह—घुमास्थेत्यत्रेत्यादि । स्यतेरिति । 'षो अ कर्मणि' इति श्यन्विकरणस्येत्यर्थः । अत्र व्याख्यानमेव शरणम् । 'विभाषा घ्रा इत्यत्र श्यन्विकरणाभ्यां साहचर्याच्च । पै ओवै शोषणे । पायति । वायति । 'ओ लश्च' इति निष्ठानत्वार्थमोदित्वम् । ननु पैधातोः कर्मणि लिट् अकि आत्वे पा इत्यत्र 'घुमास्थागापाजहातिसां हलि' इति ईत्वं स्याद् । तथा आशीर्लिङि पाय इत्यत्र 'एर्लिङि' इति एत्वं स्यात्, तथापि 'घुमास्थागापाजहातिसाम्' इत्यनुवृ तथा लुङि 'अपासी'दित्यत्र 'गातिस्था' इति सिचो लुकि 'यमरम' इति इटः अ घातस्सन्नियोगशिष्टः सगपि न स्यादित्यत आह–घुमास्थेतीत्वमित्यादिना । पारूपस्येति उदाहृतसूत्रत्रये लक्षणप्रतिपदोक्तपरिभाषया आदन्तत्वेन उपदिष्टस्यैव पा धातोर्ग्र णम्, न तु पैधातोः कृतात्वस्येति भावः । एवञ्च प्रकृते पैधातोराशीर्लिङि पायादित्यं रूपम् । लुङि सगिटोः अपासीत्, अपासिष्टामित्येव रूपम् । ष्टै वेष्टने इति । षोपदेशो यम् । कृतष्टुत्वनिर्देशः सत्वे कृते ष्टुत्वनिवृत्तिः । तदाह—स्तायतीति । ष्णै वाधु ष्णोपदेशः । कृतष्टुत्वनिर्देशः । सत्वे कृते ष्टुत्वनिवृत्तिः । तदाह—स्नायतीति । दैप् शो धने । अघुत्वादिति । घुसञ्ज्ञाविधौ दाप्दैपौ विनेत्युक्तेरिति भावः । पा पाने । पिबा इति । 'शिद्विषय' इति शेषः । तस्येति । पिबादेशस्य अदन्तत्वात् न लघूपधगुण

देयात् । अपात् । ९२६ घ्रा गन्धोपादाने । जिघ्रति । घ्रायात्—घ्रेयात् । अघ्रात्—अघ्रासीत् । ९२७ ध्मा शब्दाग्निसंयोगयोः धमति । ९२८ ष्ठा गतिनिवृत्तौ । तिष्ठति । 'स्थादिष्वभ्यासेन'-(सू २२७७) इति षत्वम् । अधितष्ठौ 'उपसर्गात्-' (सू २२७०) इति षत्वम् । अधिष्ठाता । स्थेयात् । ९२९ म्ना अभ्यासे । मनति । ९३० दाण् दाने । प्रणियच्छति । देयात् । अदात् । ९३१ ह्वृ कौटिल्ये । ह्वरति ।

---

साच्ये स्पष्टम् । अनिडयम् । पपौ । पपतुः । पपुः । भारद्वाजनियमात् थलि वेट्—पपिथ—पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । क्रादिनियमादिट् । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । आशीर्लिङि 'एर्लिङि' इत्येत्वमभिप्रेत्याह-पेयादिति । 'गातिस्था' इति सिचो लुगित्यभिप्रेत्याह-अपादिति । अपाताम् । अपुः । अपाः । अपातम् । अपात । अपाम् । अपाव । अपाम । अपास्यत । घ्रा गन्धोपादाने । 'पाघ्राध्मा' इति शिद्विषये जिघ्रादेशः । तदाह—जिघ्रतीति । अनिडयम् । जघ्रौ । जघ्रतुः । जघ्रुः । भारद्वाजनियमात् थलि वेट्—जघ्रिथ । जघ्राथ । जघ्रथुः । जघ्र । जघ्रौ । जघ्रिव । जघ्रिम । क्रादिनियमादिट् । घ्राता । घ्रास्यति । जिघ्रतु । अजिघ्रत् । जिघ्रेत् । आशीर्लिङि 'वाऽन्यस्य संयोगादेः' इत्येत्वविकल्पं मत्वा आह—घ्रायात्-घ्रेयादिति । 'विभाषा घ्राधेट्' इति सिचो वा लुक । लुगभावपक्षे आदन्तत्वात् सगिटौ । तदाह—अघ्रात् । अघ्रासीदिति । ध्माधातुरनिट् । 'पाघ्राध्मा' इति शिद्विषये धमादेशः । तदाह—धमतीति । दध्मौ । दध्मतुः । दध्मुः । दध्मिथ—दध्माथ । दध्मथुः । दध्म । दध्मौ । दध्मिव । दध्मिम । ध्माता । ध्मास्यति । धमतु । अधमत् । धमेत् । ध्मायात्—ध्मेयात् । अध्मासीत् । अध्मास्यत् । ष्ठाधातुः षोपदेशः कृतण्टुत्वनिर्देशः । शिद्विषये 'पाघ्रा' इति तिष्ठादेशः । तदाह—तिष्ठतीति । तस्थौ । अधितष्ठाविवत्यत्र तृण्कवर्गाभ्यां व्यवधानाभावेऽपि षत्वमाह— स्थादिष्विति । तस्थतुः । तस्थुः । तस्थिथ—तस्थाथ । तस्थथुः । तस्थ । तस्थौ । तस्थिव । तस्थिम । स्थाता । अधिष्ठातेत्यत्र 'सात्पदाद्योः' इति षत्वनिषेधमाशङ्क्याह—उपसर्गादिति । षत्वमिति । स्थास्यति । तिष्ठतु । अतिष्ठत् । तिष्ठेत् । आशीर्लिङि संयोगादित्वेऽपि घुमास्थादेरन्यत्वाऽभावादेत्वविकल्पो न, किन्तु 'एर्लिङि' इति नित्यमेव । तदाह—स्थेयादिति । 'गातिस्था' इति सिचो लुक् । अस्थात । अस्थास्यत् । म्ना अभ्यासे इति । अयमप्यनिट् । 'पाघ्रा' इति शिद्विषये मनादेशः । तदाह—मनतीति । मम्नौ । मम्नतुः । मम्नुः । मम्निथ—मम्नाथ । मम्नथुः । मम्न । मम्नौ । मम्निव । मम्निम । म्नाता । म्नास्यति । मनतु । अमनत् । मनेत् । म्नायात्—म्नेयात् । अम्नासीत् । अम्नास्यत् । दाण् दाने इति । अयमप्यनिट् । 'पाघ्रा' इति शिद्विषये यच्छादेशः । प्रणियच्छतीति । 'नेर्गद' इति णत्वम् । ददौ । ददतुः । ददुः । ददिथ—ददाथ । ददथुः । दद । ददौ । ददिव । ददिम । दाता । दास्यति ।

२३७९ ऋतश्च संयोगादेर्गुणः ७।४।१०॥ ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदं परत्वाण्णल्यपि भवति। रपरत्वम्। उपधावृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। 'ऋद्धनोः स्ये' (सू २२६६) ह्वरिष्यति।

२३८० गुणोऽर्तिसंयोगाद्योः ७।४।२९॥ अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वार्ष्टाम्। १३ स्वृ शब्दोपतापयोः। 'स्वरतिसूति—' (सू २२७९) इति वेट्। सस्वरिथ—सस्वर्थ। वमयोस्तु—२३८१ श्र्युकः किति ७।२।११॥ श्रिञ एकाच उगन्ताच्च

---

यच्छतु। अयच्छत्। यच्छेत्। आशीर्लिङि 'एर्लिङि' इत्येत्वं मत्वा आह—देयादिति। 'गातिस्था' इति सिचो लुकं मत्वा आह—अदादिति। ह्वृ कौटिल्ये। अयमप्यनिट्। ह्वरतीति। शपि गुणे रपरत्वम्। ऋतश्च। लिटीति। 'दयतेर्दिगि लिटि' इत्यतः तदनुवृत्तेरिति भावः। ननु तिप्सिप्मिप्सु सार्वधातुकार्धधातुकयोरित्येव गुणे सिद्धे किमर्थमिदमित्यत आह—किदर्थमपीदमिति। अतुसादिदर्थं णलाद्यकिदर्थं चेत्यर्थः। ननु अस्य गुणस्य अतुसादिषु चरितार्थत्वात् णलि 'अचो ञ्णिति' इति वृद्धिप्रसङ्गात्कथं णलि अयं गुण इत्यत आह—परत्वाण्णल्यपि भवतीति। 'अचो ञ्णिति' इति वृद्ध्यपेक्षया अस्य गुणस्य परत्वादित्यर्थः। तर्हि 'जह्वार' इति कथमित्यत आह—उपधावृद्धिरिति। 'अत उपधाया' इत्यनेनेति शेषः। जह्वर्थ। क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति च निषेध इति भावः। जह्वरथुः। जह्वर। जह्वार-जह्वर। जह्वरिव। जह्वरिम। क्रादिनियम इट्। ह्वरतु। अह्वरत्। ह्वरेत्। आशीर्लिङि ह्वृ यात् इति स्थिते कित्वाद् गुणनिषेधे प्राप्ते—गुणोऽर्ति। औणादिकः जौहोत्यादिकश्च ऋधातुः अर्तीत्यनेन गृह्यते। लुग्विकरणनिर्देशस्तु न विवक्षितः। अङ्गस्येत्यधिकृतम्। 'रीङृतः' इत्यतः ऋत इत्यनुवर्तते। अङ्गविशेषणं तदन्तविधिः ऋदन्तस्याङ्गस्येति लभ्यते। संयोगाद्योरित्यपि तद्विशेषणम्। 'अकृत्सार्वधातुकयोः' इत्यतः असार्वधातुकग्रहणमनुवर्तते। आर्धधातुक लभ्यते। 'रिङ्शयग्लिङ्क्षु' इत्यतः यकि लिङीति च लभ्यते। 'अयङ् यि क्ङिति' इत्यतः यीति सप्तम्यन्तमनुवर्तते। आर्धधातुके विशेषणत्वात्तदादिविधिः। तदाह अर्तेरित्यादिना। तथा च ह्वृ यात् इति स्थिते गुणे रपरत्वे रूपमाह—ह्वर्यादिति। अह्वार्षीदिति। सिचि वृद्धिः। रपरत्वम्। षत्वम्। अह्वरिष्यत। स्वृ शब्दोपतापयोरिति। अयमप्यनिट्। स्वरति। लिटि तु कित्यपि गुणः। णलि तु कृते गुणे रपरत्वे उपधावृद्धिः। सस्वार। सस्वरतुः। सस्वरुः। थलि तु क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति च नित्यनिषेधे प्राप्ते आह—स्वरतिसूतीति वेडिति। सस्वरिथ-सस्वर्थेति। सस्वरथुः। सस्वर। सस्वार-सस्वर। इत्यपि ज्ञेयम्। वमयोस्तु क्रादिनियमान्नित्यमिडित्यन्वयः। अत्र इण्निषेधं शङ्कितुमाह—श्र्युकः किति। श्रि

योर्गित्क्तीरिण्न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधका-ण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वात् 'ऋद्धनोः स्ये' ( सू २१६६ ) इति नित्यमिट् । स्वरिष्यति । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् । ९३३ स्मृ चिन्तायाम् । ९३४ ह्वृ संवरणे । ९३५ सृ गतौ । क्रादित्वान्नेट् । ससर्थ । ससृव । रिङ् ।

---

उक् चेति समाहारद्वन्द्वात् षष्ठी । उक् प्रत्याहारः । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणतम् उका विशेष्यते । तदन्तविधिः । 'एकाच उपदेशे' इत्यतः एकाच इत्यनुवृत्तं इगन्तेऽन्वेति । 'नेड्वशि कृति' इत्यतो नेडिति । क्नीति सप्तमी षष्ठ्यर्थे । गश्च कश्च ङ्श्च ते इतो यस्येति विग्रहः । गकारस्य चर्त्वेन निर्देशः तदाह-श्रिञ् एकाच इत्यादिना । गकारप्रश्लेषः किम् ? भूष्णुः । 'ग्लाजिस्थश्च ग्स्नुः' इति चकाराद् भूधातोः ग्स्नुः । तस्य गित्वादिट् न । किच्चे तु स्यात्स्नुरित्यत्र 'घुमास्था' इति ईत् स्यात् । इण्न स्यादित्यनन्तरं अनेन निषेधे प्राप्ते इत्यन्वयः । नन्वियं शङ्का न युज्यते । 'श्र्युकः किति' इति निषेधं बाधित्वा परत्वात् 'स्वरतिसूती'ति विकल्पस्य प्राप्तेरित्यत आह-परमपीत्यादि सामर्थ्यादित्यन्तम् । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्परमपि स्वरत्यादिविकल्पं बाधित्वा अनेन निषेधे प्राप्ते इत्यन्वयः । 'आर्धधातुकस्येड्' इत्यादिविधिकाण्डात्प्रागेव 'नेड्वशि कृति' इत्यादिप्रतिषेधकाण्डारम्भसामर्थ्यात् 'स्वरति' इति विकल्पोऽप्यनेन बाध्यते इत्यर्थः । परमपीत्यादिः प्राप्ते इत्यन्तः शङ्काग्रन्थः । परिहरति-क्रादिनियमान्नित्यमिडिति । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावान् इण्निषेधः स लिटि चेत् तर्हि क्रादिभ्य एवेत्युक्तत्वादिति भावः । लुटि-स्वरिता-स्वर्ता । लृटि स्ये 'स्वरति' इति विकल्पं निरस्यति—परत्वादिति । स्वरतु । अस्वरत् । स्वर्यादिति । आशीर्लिङि 'गुणोऽर्तिसंयोगाद्योः' इति गुणः । अस्वारीदिति । 'स्वरति' इति इट्पक्षे वृद्धिरिति भावः । अस्वार्षीदिति । इडभावे 'सिचि वृद्धिः' इति 'वृद्धिरि'ति भावः । स्मृ चिन्तायामिति । अयमप्यनिट् । स्मरति । लिटि 'ऋतश्च' इति कित्यपि गुणः । णलि तु गुणे उपधावृद्धिः । सस्मार । सस्मरतुः । सस्मरुः ऋदन्तत्वाद्भारद्वाजमतेऽपि क्रादिनियमप्राप्तस्य इटः थलि नित्यनिषेधः । सस्मर्थ । सस्मरथुः । सस्मर । सस्मार—सस्मर । सस्मरिव । सस्मरिम । स्मर्ता । लृटि स्ये 'ऋद्धनोः' इति इट् । स्मरिष्यति । स्मरतु । अस्मरत् । स्मरेत् । आशीर्लिङि 'गुणोऽर्ति' इति गुणः—स्मर्यात् । लुङि सिचि वृद्धौ रपरत्वम्—अस्मार्षीत् । अस्मरिष्यत् । ह्वृ संवरणे इति । अयमपि स्मृधातुवत् । सृ गताविति । ऋदन्तोऽयमनिट् । सरति । लिटि संयोगादित्वाऽभावात् 'ऋतश्चे'ति गुणो न । ससार । सस्रतुः । सस्रुः । क्रादित्वान्नेडिति । सृधातोः क्रादिषु पाठादिति भावः । ससर्थेति । क्रादित्वात्थल्यपि नित्यं निषेध इति भावः । सस्रथुः । सस्र । ससार । ससर । ससृव । ससृम । इत्यपि ज्ञेयम् । सर्ता । लृटि

स्रियात्। असार्षीत्। असार्ष्टाम्। २३८२ सर्तिशास्त्यर्तिभ्यश्च ३।१।५६ एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि। इह लुक्शपा शास्तिना साहचर्यात् सर्त्यर्ती शौ त्यादिकावेव गृह्येते। तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु 'पाघ्राध्मा' (सू २३६ इति शिति धौरादेशः। धावति। ९३६ ऋ गतिप्रापणयोः। ऋच्छति। २३ ऋच्छत्यॄताम् ७।४।११॥ तौदादिकस्य ऋच्छतेः ऋधातोः ॠतां च गुणः लिटि। णलि प्राग्वदुपधावृद्धिः। आर। आरतुः। आरुः। २३८४ इडत्यर्ति

'ऋद्धनोः' इति इट्—सरिष्यति। सरतु। असरत्। सरेत्। आशीर्लिङि संयोगादि ऽभावात् 'गुणोऽर्ति' इति न गुणः। किन्तु 'रिङ्शयग्लिङ्क्षु' इति रिङित्याह—स्रि ति। स्रियादिति। रीङि प्रकृते रिङ्विधिसामर्थ्यान्न दीर्घ इति भावः। असार्षीदि सिचि वृद्धौ रपरत्वम्। अत्र च्लेरङमाशङ्कितुमाह—सर्ति। च्लि लुङीत्यनुवर्त 'णिश्रिद्रुस्रुभ्यः' इत्यतः कर्तरि चङीति। तदाह—एभ्य इति। ततश्च प्रकृते 'असा र्षि'त्यत्र अङ् स्यादिति शङ्का सूचिता। तां परिहरति—इह लुप्तेत्यादिना। इह विधौ शास्तीत्यनेन लुप्तविकरणः शास्तिर्गृह्यते इति निर्विवादम्, तस्य वि णान्तराभावात्। एवं च तत्साहचर्यात् सृधातुः ऋधातुश्च जौहोत्यादिकौ विकरणावेव गृह्येते इत्यर्थः, लुप्तविकरणत्वसाम्यादिति भावः। तेनेति। विकरणयोरेव ग्रहणेन भ्वादिगणस्थयोः सृधात्वृधात्वोरङ् नेत्यर्थः। तदेवं धातोर्गतिसामान्यवृत्तेरुक्तानि रूपाणि। यदि शीघ्रगतौ सृधातुः, तदा विशेषमाह—शीघ्रगतौ त्विति। धौरादेश इति। धौशब्दस्य 'धौरि'ति प्रथमान्त 'धौ' इत्यौकारान्त आदेश इत्यर्थः। 'पाघ्रा' इति सूत्रे सर्तीति श्तिपा निर्दे लुप्तविकरणनिर्देशस्तु अविवक्षित इति भावः। 'सर्तेर्वेगितायां गतौ धावादेशः' इति र्तिकमभिप्रेत्येदम्। धावतीति। शपि सृधातोर्धौभावे धावादेशः। धावतु। अधावत्। धावेत्। ऋगतिप्रापणयोः। अनिट्। 'पाघ्राध्मा' इति शिद्विषये ऋच्छादेशः। तदाह—ऋ तीति। ननु ऋ अतुस् इति स्थिते द्वित्वे उरदत्वे रपरत्वे हलादिशेषे 'अत आदेः' दीर्घे आ ऋ अतुस् इति स्थिते 'असंयोगात्' इति कित्वादुत्तरखण्डस्य गुणा यणं बाधित्वा परत्वाद्गुणे आरतुरिति स्यादित्यतस्तत्र गुणविधानमाह—ऋच्छ ताम्। 'दयतेर्दिगि लिटि' इत्यतो लिटीति, 'ऋतश्च संयोगादेर्गुणः' इत्यतो गुण चानुवर्तते। ऋच्छति ऋ ॠत् एषां द्वन्द्वात् षष्ठीबहुवचनम्। बहुवचनादेव ॠकारग्रह गम्यते। प्रश्लिष्टेन च ऋकारेण ऋधातुरेव गृह्यते। ऋवर्णान्तधातुग्रहणे 'ऋ संयोगादेर्गुणः' इत्यस्य वैयर्थ्यात्। 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति तौ दिकस्य 'ऋच्छती'ति श्तिपा निर्देशः। भौवादिकस्य धातोस्तु ऋग्रहणेनैव सि तदाह—तौदादिकस्य ऋच्छतेरित्यादिना। किदर्थमपीदं सूत्रं परत्वादकित्यपि भव णलि प्राग्वदिति। 'हृ कौटिल्ये' इत्यत्र उक्तया रीत्या किन्तु चरितार्थोऽप्ययं

इत्यतीजाम् ७।२।६६॥ अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । अर्यात् । आर्षीत् । आर्ष्टाम् । ९३७ गॄ ९३८ घृ सेचने । गरति । जगार । जगर्थ । जग्रिव । रिङ् । ग्रियात् । अगार्षीत् । ९३९ ध्वृ हूर्च्छने । ९४० स्रु गतौ । सुस्रोथ । सुस्रुव । स्रूयात् । 'णिश्रि—' ( सू २३१२ ) इति चङ् ।

---

'अचो ञ्णिति' इति वृद्ध्यपेक्षया परत्वात् णलपि भवति । ततो रपरत्वे उपधावृद्धिरित्यर्थः । आरेति । ऋधातोर्लिटि तिपो णलि द्वित्वे उरदत्वे हलादिशेषे 'अत आदेः' इति दीर्घे उत्तरखण्डस्य वृद्धौ रपरत्वे सवर्णदीर्घ इति भावः । आरतुरिति । पूर्ववत् द्वित्वादौ आ ऋ अतुसिति स्थिते किंत्वाद्गुणनिषेधे प्राप्ते 'ऋच्छत्यृताम्' इति गुणे रपरत्वे सवर्णदीर्घ इति भावः । आरुरित्यप्येवम् । थलि तु क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति ऋदन्तत्वात् भारद्वाजमतेऽपि निषेधे प्राप्ते आह—इडत्यर्ति । पञ्चम्यर्थे षष्ठी । 'अचस्तास्वत्' इत्यतः थलीत्यनुवर्तते । 'विभाषा सृजिदृशोः' इति पूर्वसूत्राद्विभाषाग्रहणमस्वरितत्वान्नानुवर्तते । तदाह—अद् ऋ इत्यादिना । आर्धधातुकस्येडित्यनुवृत्तौ पुनरिड्ग्रहणं तु 'न वृद्भ्यश्चतुर्भ्यः' इत्यतो नेत्यनुवृत्तिनिवृत्तये इत्याहुः । आरिथेति । आरथुः । आर । आर । आरिव । आरिम । क्रादिनियमादिट् । अरिष्यतीति । 'ऋद्धनोः' इति इट् । ऋच्छतु । आर्च्छत् । अर्यादिति । 'गुणोऽर्ति' इति गुणे रपरत्वमिति भावः । आर्षीदिति । सिचि वृद्धिः । 'सर्तिशास्त्यर्तिभ्यश्च' इति अङ् तु न, तत्र सौत्रादिकस्य ऋधातोर्न ग्रहणमित्यनुपदमेवोक्तेरिति भावः । आरिष्यत् । 'ऋद्धनोः स्ये' इति इट् । गृ घृ सेचने । अनिटौ । गरतीति । जगार । असंयोगादित्वात् 'ऋतश्च' इति गुणो न । जग्रतुः । जग्रुः । क्रादिनियमेन इटि प्राप्ते 'अचस्तास्वत्' इति नेट् । ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट् तदाह—जगर्थेति । जग्रथुः । जग्र । जगार-जगर । जग्रिवेति । क्रादिनियमादिट् । जग्रिम । गर्ता । गरिष्यति । 'ऋद्धनोः' इति इट् । गरतु । अगरत् । गरेत् । रिङिति । आशीर्लिङि असंयोगादित्वात् 'गुणोऽर्ति' इति गुणाभावे 'रिङ् शयग्लिङ्क्षु' इति रिङित्यर्थः । ग्रियादिति । रीङि प्रकृते रिङ्विधेर्न दीर्घः । अगार्षीदिति । सिचि वृद्धौ रपरत्वम् । अगार्ष्टाम् । अगरिष्यत् । 'ऋद्धनोः' इति इट् । घृधातोस्तु सौत्रादिकस्य घृतं घर्मः घृणा इत्यत्रैव प्रयोगः, नान्यत्रेति 'तृज्वत्क्रोष्टुः' इति सूत्रे भाष्ये स्पष्टम् । ध्वृ हूर्च्छने इति । हूर्च्छनं कुटिलीभवनम् । ध्वरति । दध्वार । 'ऋतश्च' इति गुणः । दध्वरतुः । दध्वरुः । थलि 'अचस्तास्वत्' इति क्रादिनियमप्राप्त इट् न । ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट् । दध्वर्थ । दध्वरथुः । दध्वर । दध्वार-दध्वर । दध्वरिव । दध्वरिम । क्रादिनियमादिट् । ध्वर्ता । 'ऋद्धनोः' इति इट्—ध्वरिष्यति । ध्वरतु । अध्वरत् । ध्वरेत् । आशीर्लिङि 'गुणोऽर्ति' इति गुणः । ध्वर्यात् । अध्वार्षीत् । अध्वरिष्यत् । स्रु गतौ । अनिट् । स्रवति । सुस्राव । अतुसादौ किंत्वाद् गुणाभावे उवङ् । सुस्रुवतुः । सुस्रुवुः । क्रादित्वान्नेट् । तदाह—सुस्रोथेति ।

लघूपधगुणान्तरङ्गत्वादुवङ् असुसुवत् । ४४१ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्य
ज्ञानम् । सुषोथ-सुषविथ । सुषुविव । सोता । २३८५ स्तुसुधूञ्भ्यः परस्मैपदे
७ । २ । ७२ ॥ एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्
ञिङ्भ्यां साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत् । ९४२ श्रु श्रव
२३८६ श्रुवः शृ च ३ । १ । ७४ ॥ श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्य
शब्विषये । शपोऽपवादः । श्नोर्ङित्त्वाद्धातोर्गुणो न । शृणोति । शृणुतः । २३८
हुश्नुवोः सार्वधातुके ६।४।८७॥ जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्य

सुसुवथुः सुसुव । सुसाव—सुसव । सुसुवेति । क्रादित्वान्नेट् । सुसुवेत्यपि ज्ञेय
सोता । सोष्यति । सवतु । असवत् । सवेत् । सूयादिति । 'अकृत्सार्वधातुकयोः'
दीर्घ इति भावः । लुङि विशेषमाह—णिश्रीति । चङीति । 'चङि' इति द्वित्वमि
द्रष्टव्यम् । ननु असुसु अ त् इति स्थिते रेफादुत्तरस्य उकारस्य 'सार्वधातुकार्धधा
कयो'रिति गुणस्य चङ्निमित्तकस्य ङित्त्वान्निषेधेऽपि उवङपेक्षया परत्वात् तिपं
मित्ती कृत्य रेफादुकारस्य लघूपधगुणः स्यादित्यत आह—लघूपधगुणादन्तरङ्गत्वादु
ति । बहिर्भूततिपपेक्षत्वाल्लघूपधगुणः बहिरङ्गः । अन्तर्गतचङपेक्षत्वादुवङन्तर
अतः उवङेव भवति । परादन्तरङ्गस्य बलवत्त्वादिति भावः । असुसुवदिति । अ
ष्यत् । षु प्रसवेति । अत्र प्रसवशब्दस्य गर्भमोचनपरत्वभ्रमं वारयति—प्रसवोऽभ्य
ज्ञानमिति । 'ओं प्रणवेति ब्रह्मा प्रसौति' इत्यादौ तथा दर्शनादिति भावः । सोपदे
ऽयम् । णपि उवङं बाधित्वा परत्वात् सार्वधातुकयोरिति गुणः । सवति । सुषा
अतुसादौ कित्त्वाद्गुणाऽभावे उवङ् । सुषुवतुः । सुषुवुः । भारद्वाजनियमात्थलि
वेट् । तदाह—सुषविथ-सुषोथेति । थलोऽकित्त्वाद् गुण इति भावः । सुषुवथुः । सुषु
सुषाव—सुषव । वमयोस्तु क्रादिनियमान्नित्यमिट् तदाह—सुषुविवेति । कित्त्वा
गुणाभावे । उवङ् । सोतेति । सोष्यति । सवतु । असवत् । सवेत् । सूयात् । इ
असौषीदिति प्राप्ते—स्तुसुधूञ्भ्यः । 'इडत्यर्ति' इत्यतः इडित्यनुवर्तते । 'अञ्जेः सि
इत्यतः सिचीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—एभ्यः सिच इति । असावीदि
सिचि वृद्धौ 'इट ईटि' इति सिज्लोपः । पूर्वोत्तराभ्यामिति । स्तुधूञ्भ्यामित्यर्थ
सुनोतेरिति । षुञ् अभिषवे इति श्नुविकरणस्येत्यर्थः । असौषीदिति । इडभावे सि
वृद्धिः । इति भावः । असोष्यत् । श्रु श्रवणे इति । उदन्तोऽयमनिट् । श्रुवः शृ च ।
इति सूत्रप्रथमाक्षम् । चकारेण 'स्वादिभ्यः श्नुः' इति सूत्रस्थः श्नुः समुच्चीयते
तदाह—श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्चेति । शपोऽपवाद इति । अनेन शब्वि
कर्त्रर्थसार्वधातुक एवास्य प्रवृत्तिः सूचिता । श्नोर्ङित्त्वादिति । 'सार्वधातुकम
दित्यनेनेति भावः । शृणोतीति । तिपमाश्रित्य श्नोर्गुणः । तसादीनां ङित्त्वा
श्नोर्न गुणः । तदाह—शृणुत इति । शृणु अन्तीति स्थिते अन्तेः झिस्य

